बीजं द्वितीयबीजेषु मन्त्रस्यास्य वरानने।
दीर्घपूर्वं तुरीयस्य पञ्चमं शक्तिमादिशेत्॥
वामदेवो नाम ऋषिः पङ्क्तिश्छन्दश्च आदितः।
देवता शिव एवाहं मन्त्रस्यास्य वरानने॥
उमा च वै वरारोहा विश्वामित्रस्तथाङ्गिराः।
भारद्वाजश्च वर्णानां क्रमश ऋषयः स्मृताः॥
गायत्र्यनुष्टुप्त्रिष्टुप च छन्दांसि बृहतीविराट्।
इन्द्रो रुद्रो हरिर्ब्रह्मा स्कन्दस्तेषां च देवताः॥
मम पञ्च मुखान्याहुः स्थाने तेषां वरानने।
पूर्व्वादिपूर्व्वाद्यं तं नकारादि यथा क्रमं॥
उदात्तः प्रथमो वर्णश्चतुर्थश्च द्वितीयकः।
पञ्चमः स्वरितश्चैव मध्यमो निहतः स्वयं॥
मूलविद्या शिवं शैवं सूत्रं पञ्चाक्षरं तथा।
नामान्यस्य विजानीयाद्देवं मे हृदयं मतं॥
नकारः शिव उच्येत मकारस्तु शिखोच्यते।
शिकारः कवचं तद्वद्वाकारो नेत्रउच्यते॥
यकारोऽस्त्रं नमः स्वाहावषट्हुंवौषडित्यतः।
फडित्यपि च वर्णानामन्ते ह्रत्वं यदा तदा॥
तत्रापि मूलमन्त्रोऽयं किञ्चिद्भेदसमन्वितं।
तत्रास्य पञ्चमो वर्णो द्वादशस्वरभूषितः॥
तस्मादनेन मन्त्रेण मनोवाक्कायभेदतः।
शिवयोरर्च्चनं कुर्य्यात् जपहोमादिकं तथा॥
प्रदक्षिणं प्रणामश्च कृत्वा स्नानं समर्पयेत्।

ततः पुरस्ताद्देवस्य तुविधेव प्रपूजयेत् ॥
दत्त्वार्घ्यपुष्टौ पुष्पाणि देवमुद्दिश्य लिङ्गतः ।
अभिधाभिश्च संरक्ष्य यद्वा देवस्य नामतः ॥
प्रत्यहं अनयत्नेवं कुर्य्यात् सर्वं पुरोहित ।
ततस्तस्याम्बुजं लिङ्गं सर्व्वोपकरणान्वितं ॥
समर्पयेत्तद्गुरवे स्थापयेद्वा शिवालये ।
संपूज्य च गुरूनन्यान् व्रतिनश्च विशेषतः ॥
भक्तान् द्विजानभुक्तांश्च दीनानाथांश्च तोषयेत् ।
स्वयञ्चानशनप्रायः फलमूलाशनोऽथवा ॥
पयोव्रतो वा भिक्षाशी दिवैवैकाशनोभवे ।
नक्तं मुक्ताशनं नित्यं भूशयोविरतः शुचिः ॥
भस्मशायी शयाशायी वीरासनशयोऽथ वा ।
ब्रह्मचर्य्यरतोनित्यं व्रतमेतत्समाचरेत् ॥
अर्कवारे तथेन्दौ वा पञ्चदश्याञ्च पक्षयोः ।
अष्टम्याञ्च चतुर्दश्यां शक्त्याह्युपवसेदपि ॥
पाषण्डपतितोदक्या सूतकान्त्यजपूर्व्विकान् ।
वर्जयेत्सर्व्वयत्नेन मनसा कर्म्मणा गिरा ॥
क्षमा, दानं दया, सत्यमहिंसा शीलता भवेत् ।
सन्तुष्टश्च प्रशान्तश्च जपध्यानरतस्तथा ॥
कुर्यात्त्रिषवणं स्नानं भस्मस्नानमथापि वा ।
पूजा वैशाखिकश्चैव मनसा कर्म्मणा गिरा ॥
बहुनात्र किमुक्तेन नाचरेदशिव व्रती ।
प्रमादात्तु सदाचारे निरूप्य गुरुलाघवं ॥

उचितां निष्कृतिं कुर्यात् पूजाहोमजपादिभिः।
आसमाप्तौ व्रतस्यैवमाचरेदप्रमादतः।
गोदानवृषोत्सर्गं कुर्यात् पूजाञ्च संवदः॥
सामान्यमेतत् कथितं व्रतस्यास्य विधानतः।
प्रतिमासं विशेषञ्च प्रवक्ष्यामि यथाक्रमं॥
वैशाखे वज्रलिङ्गन्तु ज्यैष्ठे मारकतं शुभं।
आषाढे मौक्तिकं विद्यात् श्रावणे नीलनिर्म्मितं॥
मासे भाद्रपदे देवं पद्मरागमयं शुभं।
आश्वयुज्यान्तु विधिवद्गोमेदकमयं शुभं॥
कार्त्तिक्यान्तु द्रुमं लिङ्गं वैदूर्य्यं मार्गशीर्षके।
पुष्परागमयं पुष्ये माघे तु मणिजोरवं॥
फाल्गुन्याञ्चन्द्रकान्तोयं चैत्रमासेऽथवा तथा।
सर्व्वमासेषु रत्नानामलाभे हेममेव वा॥
हेमालाभे राजते वा ताम्रजं लोहमेव वा।
मृण्मयं वा यथालाभं क्षणिकं चाश्मदेव वा॥
सर्व्वं गन्धमयं वाथ लिङ्गं कुर्याद्यथारुचि।
व्रतावसानसमये समाचरितमेत्यकं॥
कृत्वा वैशाखिकीं पूजां हुत्वा चैव यथारुचि।
संपूज्य यजमाचार्य्यं व्रतिनश्च विशेषतः॥
देशिकेनाभ्यनुज्ञातः प्राङ्मुखो वाप्युदङ्मुखः।
दर्भासनो दर्भपाणिः प्राणापानौ नियम्य च
जपित्वा शक्तितो मूलं ध्यात्वा लिङ्गं शिवात्मकं।
अनुज्ञाप्य यथापूर्व्वं नमस्कृत्य कृताञ्जलिः॥

अनुत्सृजामि भगवन् व्रतमेतत्त्वदाज्ञया ।
इत्युक्त्वा दीर्घमूलान्तु दर्भानुत्तरतस्त्यजेत् ॥
ततो दर्भजटाधारमेखला पवित्रोत्सृजेत् ।
पुनराचम्य विधिवत् पञ्चाक्षरमुदीरयेत् ।
यः कुर्यात् व्रतमोदीक्षामादेहान्तमनाःकिल ॥
व्रतमेतत् प्रकुर्वीत स तु वै नैष्ठिकः स्मृतः ।
सत्यः शमी च विज्ञेयो महापाशुपतस्तथा ॥
स एव तपसा श्रेष्ठः स एव च महाव्रती ।
न तेन सदृशः कश्चित् कृतकृत्यो मुमुक्षुषु ॥
यतिश्चनैष्ठिकोयातः समाहुर्नैष्ठिकोत्तमं ।
या नार्य्यं तद्द्वादशाहं व्रतमेतत् समाचरेत् ॥
सोऽपि नैष्ठिकतुल्यः स्यात् शिवव्रतसमन्वयात् ।
घृताक्तो यश्चरेदेतत् व्रतं व्रतपरायणः ॥
दिनैकदिवसस्यापि स च कथन नैष्ठिकः ।
कृतकृत्यश्च निष्कामो यश्चरेद्व्रतमुत्तमं ॥
शिवार्पितात्मा सततं तेनान्यः सदृशः क्वचित् ।
भवच्छिन्नो द्विजो विद्वान् महापातकसञ्चयैः ॥
पापैर्विमुच्यते सद्यो मुच्यते न च संशयः ॥
रुद्राये पदवीं श्रेष्ठां तस्यास्य परिकीर्त्तितं ॥
यस्मात् सर्वेषु लोकेषु वीर्यवान् कृतसंयतः ।
भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्नि सङ्गमात् ॥
भस्मस्नान विशुद्धात्मा भस्मनिष्ठ इति स्मृतः ।
भस्मसन्दिग्धसर्वाङ्गो भस्मनिष्ठ इति स्मृतः ॥

भूतप्रेतेषु सर्व्वेषु लोकेष्वन्येषु वा भवेत्।
अरोगः सर्व्वसिद्धार्थो भवेज्ज्ञातो बहुःसह॥
भस्मनिष्ठस्य सान्निध्याद्विद्रवोतिन संशयः॥
भासकत्वसितं प्रोक्तं भक्षकल्मषभक्षणात्।
भूति भूति करं पुंसां रक्ष रक्ष परं परं॥
किमर्थ मिह वक्तव्यं भस्ममाहात्म्यकारणं।
व्रती च भस्मना स्नातः स्वयं देवो महेश्वरः॥
परमास्त्रञ्च शैवानां भस्मैतत्पारमेश्वरं।
धौम्याग्रजस्य तपसि व्यापादोयं निवारितः॥
यस्मात्सर्वं प्रयत्नेन कृत्वा पाशुपतं व्रतं।
धनवस्त्रस्य संग्रह्य भस्मस्नानरतो भवेत्॥

## इति वायुसंहितोक्तं * पाशुपतं व्रतं।

———000———

### अथ गजपूजा।

तत्र श्रीगजेश्वर प्रार्थनमधिकृत्याह पालकाव्यः।
एवमस्त्विति देवेशस्तमुवाच मतङ्गजं॥
आषाढ्यां पूर्णचन्द्रायां मामभ्यर्च्य नराधिपाः।
तवपूजां करिष्यन्ति दत्तोऽस्मिवरस्तव॥
तस्माद्गजसमाराज पूजा कार्य्या नरोत्तमैः।
श्रीगजाय विधानेन शुचिभिस्तूपवासितैः॥

* इति पुराणोक्तं पाशुपतव्रतमिति पुस्तकान्तर पाठः।

श्रीकामैश्च विशेषेण सदैश्वर्य्यकरी शुभा ।
दत्त्वा तस्य वरं देवो भगवान् भूतभावनः ।
गतः स्वमालयं देवो गताः सर्व्वाश्च देवताः ॥
श्रियं ददाति विपुलां यस्मात् पूजाविधानतः ।
प्रख्यातः श्रीगजस्तस्माज्जयदो नृपसत्तम ॥
तेनैषा क्रियते पूजा द्विरदानान्तु नित्यशः ।
इदमन्यत् प्रवक्ष्यामि कल्पमस्य नराधिप ॥
चतुर्णां क्षीरवृक्षाणां द्रव्यमन्यत् बन्धुभिः ।
तर्पांश्च प्राहयेद्विप्रो बलिं होमांश्च कारयेत् ।
पुण्याहघोषेण ततः स्वस्ति वाच्य द्विजोत्तमान् ।
पञ्चारत्निप्रमाणंस्यादयन्त्रिकमकोटरं ॥
सुवृत्तञ्चैवानुपूर्व्वञ्च भक्तकैः साधुवर्ज्जितं ।
शाखामातास्य च भवेत् कर्णिका द्वादशाङ्गुला ॥
त्रिंशल्यङ्गुलनाहा च कार्य्या तु सुसमाहिता ।
वेलाग्रबाहनलिनीमग्निव्यञ्जनकं तथा ॥
वैदलं यज्ञिकं भाण्डन्तथैवामनकङ्कृतं ।
सचन्दनांश्च कलशांश्चतुरः† मोदकांस्तथा ।
सामान्यं यच्च तत्सर्व्वं शोपन्द्रव्यमुपाहरेत् ॥
ततो विप्रः शुचिर्भूत्वा नमस्कृत्य महेश्वरं ।
सनत्कुमारं वरदं श्रीगजञ्च महाबलं ॥
सर्व्वान् देवान् नमस्कृत्य दिग्गजाष्टौ समाहितः ।
सर्व्वानृषिगणांश्चैव तथा नक्षत्रमण्डलं ॥

---

† चित्रामयादर्शसिनौ पुष्करिणीति पुस्तकान्तरे पाठः ।

समुद्रानापगाः सर्व्वाः समहोरगराक्षसाः।
पर्व्वताः सर्व्वभूतानि जङ्गमाजङ्गमं जगत्॥
ऐरावतांश्चाथ पुनर्नमस्कृत्य दिशागजान्।
उपोष्य सन्निवेद्राशौ वासोभिरहतैर्द्विज॥
सेनान्यांश्च नमस्कृत्य शुचिर्भूत्वा कृताञ्जलिः।
कुशास्तरणसंवृत्ते स्थण्डिले प्रयतः शुचिः॥
श्वोभूते पुनरुत्थाय स्नातो भूत्वा समाहितः।
तस्थे यन्ता गजेन्द्रस्य नमस्कृत्याधिरोहयेत्॥
सच्छत्रं तालव्यजनं माल्यदामोपशोभितं।
नन्दितूर्य्येण महता चोद्यमानेन शोभितं॥
सालङ्करणकैः पुरं हेमजालविभूषितं।
नानाकारैस्तथावस्त्रैःसमन्तात् परिवेष्टितं॥
चन्दनागुरुभिश्चैव सर्व्वगन्धैरलङ्कृतं।
स्त्रीरूपवेशैः पुरुषैः परिचर्य्योपशोभितैः।
जल्पद्भिर्निष्ठुरं वाक्यं प्रहसद्भिस्तथैव च॥
चतुष्पथे वीथिमार्गे तथैव चत्वरेषु च।
राजमार्गेषु च भृशं घोषयन्तस्ततस्ततः॥
अर्च्चयिष्यन्ति* तन्त्वेवं राजानो विजयैषिणः†।
सेनापतिरमात्याश्च ये चान्ये तद्विजानतः॥
पूजयन्ति यथा न्यायं तथैव गजजीविनः।

---

* चानयिष्यन्तीति पुस्तकान्तरे पाठः।

† विपक्षैषिण इति पुस्तकान्तरे पाठः।

अतोन्यथा तु कुर्व्वाणाः ससप्तिबलवाहनाः* ।
ज्वराजालैर्व्विनश्यन्ति देवताविक्रमेण वै ॥
प्रयुञ्जते च वै तस्मै सम्यक् पूजां नराधिप ।
सपुत्रदारा वर्द्धन्ते सराष्ट्रबलवाहनाः ॥
पार्थ्वा माहेश्वरस्यैतां प्रतिगृह्णन्ति ये नृपाः ।
संग्रामे शत्रुसंघाते भवन्ति च विदारिणः ॥
काले बीजानि रोहन्ति सम्यग्वर्षति वासवः ।
न भवत्यत्र मरको व्याधिर्हानिस्तथैव च ॥
निरामयश्च भुञ्जीत राजा कृत्स्नां वसुन्धरां ।
रत्नाकरवतीं देवीं सशैलवनकाननां ॥
अरोगा बलवन्तश्च जायन्ते च मतङ्गजाः ।
राजोपजीविनः सर्व्वे कामभोगैः समन्विताः ॥
पुत्रैश्च पशुभिश्चैव जीवन्ति च शतं समाः ।
अरोगा बलवत्यश्च जायन्तेत्र प्रजा भृश ॥
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनं ।
यांश्च प्रार्थयते कामान् सर्व्वांस्तान् प्राप्नुयान्नरः ॥
एवं वृत्तं महाराज शर्व्वो भक्त्यान्वितं विभो ।
श्रीगजस्य भयाद्दिवि त्रिषु† लोकेषु विश्रुतं ॥
मया ख्यातं महाबाहो विस्तरेण यथाक्रमं ॥

इति पालकाप्रोक्तागजपूजाविधिः ।

---

* सराष्ट्रबलवाहना इति पुस्तकान्तरे पाठः ।

† भयं विदिदिवषु लोकेषु पूजितमिति पुस्तकान्तरे पाठः ।

अथार्व्वणगोपथब्राह्मणं।

अथाश्वयुजे मासे पौर्णमास्या

मपराह्णे हस्तिनो नीराजनं कुर्य्यात्।

प्रागुदक्प्रवने देशे यत्र दिशि वा मनोरमते गिरय

स्ते पर्व्वता इत्येतया हस्तशतमर्द्धम्बा मण्डलं

प्रगृह्य याभिर्य्यमितिसंप्रोचयेत् तत्र श्लोकाः

दशहस्तसमुत्सेधं पञ्चहस्तं सुविस्तृतं।

शान्तवृक्षमयं कुर्य्यात्तोरणं पुष्टिवर्द्धनं॥

शुक्लैः शुक्लाम्बरधरैस्तन्माल्यैरपि भूषित।

कारयेत् स्थण्डिले शुभ्रे रसैश्च परिपूरिते॥

रसैस्त्वामभिषिञ्चामि भूमे मह्यं शिवा भव।

असपत्ना सपत्नघ्नो मम यशविवर्द्धनी॥

इमौस्तम्भौ घृताभ्यक्तौ शुभौ भावसमावृतौ *॥

योमा कयाभिदामेति तमिमौ स्तम्भौ निर्द्दहतामितपुच्छयस्व ब्राह्मणस्य त इत्यभाभ्यांसुवर्णमालापताकैस्तम्भौ संयोजय तस्या धस्ताच्चतुर्हस्तां वेदीं कृत्वा तन्त्वमित्युक्तदर्भैः पवित्रपाणिर्वलि पुष्पाणि च दत्त्वा मधुलाजामिश्रैःस्वस्तिकं संयावदधिकृशर कूपसघृतविविधान्नपानभक्ष्यलक्षफलैरग्निं परिस्तीर्य्य आपो अस्मान्मातरः शुन्धन्त्वितिचतुरोडुम्बरान् कलशान् छन्दोदकेन पूरयित्वा प्रतिदिशमवस्थाप्य दद्यादुद्राग्नेयं वायव्यवारुणा मन्त्रारत्नोघ्नंकृत्वा दूषणं यशस्यवर्चस्यानिच इत्वोषधिंसमादाय द्विहस्तमण्डलमित्युक्त्वा। तत्र श्लोकाः।

---

* वायससम्वृतामिति पुस्तकान्तरे पाठः।

† मदयन्निति पुस्तकान्तरे पाठः।

सिंही व्याघ्री च हरिणी अमृता चापराजिता।
पृश्निपर्णी च दूर्वा च पद्मगुत्पलमालिनी॥

तामनुमन्त्रयेदिदं कटकवद्ध्यादापि वैयाघ्रमनडुचर्म्म परिस्तीर्य्य, वैतस्याङ्कुश्यमनुमन्त्र्य, ततोऽस्याधिदेवता तस्मै च बलिं दत्त्वा, पिण्डानि च दद्यात्।

हस्तिनाम वाचयेद्यस्यां दिशि स रिपुर्भवति तां दिशं गत्वा हस्तिनमानयेद्धिरण्येन रजतेन वस्त्रेण मणिमुक्ताप्रवालेन चन्दनेन भद्रदारुणया कुष्ठेन नलदेन रोचनयाञ्जनेन मधिकुशिलया पद्मकुमुदोत्पलैर्मामन्त्रेवं वदति सूक्तं दक्षिणोत्तरप्रतिमुखं प्रति-अपेक्षेद्येव गाथास्त्वभ्यंजयेत् जपेत्। तत्रश्लोकाः। हस्तिनो-रत्नपदाः कर्त्तव्यो वैवर्णोनव। षोड़शारत्निमात्रस्तु चातुपर्ब मनोहर। तेन वारयाम्तारयते दण्डाये पु द्वयानि कृत्वा प्रसति जातं जातं। जातवेदसमित्यग्निं प्रज्वालयेत् सुजातं जातवेदसमिति नीराजयित्वा निधिं बिभ्रतीति शालास्तु प्रवेशयेयेन-प्रेचमाणाः स्वानि स्थानानि व्रजन्ति दीर्घायुषोबलवन्तश्च भवन्ति गोसहस्रं कर्त्तुर्दक्षिणायामवरञ्च।

इति गजनीराजन विधिः।

———000———

सनत्कुमार उवाच।

अथ पर्व्वणि यत्कृत्यं तच्छृणुष्व महामते।
यज्ज्ञात्वा मनसः शान्तिं* सुसम्भूतिश्च विन्दति॥

---

* कान्तिमिति पुस्तकान्तरे पाठः।

यत्पर्व्वणि कृतन्तावत्तत् शुभम्वा यदि वाशुभं।
षष्टिवर्षसहस्राणि तत्फलं भुञ्जते नराः॥
इयितं जीवितं पुंसां सर्वेषामपि सम्मतं।
यतस्त्वचयसंग्रामपरिक्लेशयुता नराः॥
अतस्तच्छान्तिजननमायुःप्रदमनाकुलं।
सर्व्वसौख्यप्रदं भद्रं तादृग्व्रतमिहोच्यते॥
चतुर्दश्यां शुचिः स्नात्वा दन्तधावनपूर्व्वकं।
चरितब्रह्मचर्यश्च व्रतवाक्कायमानसः॥
पौर्णमास्यान्तथा कृत्वा देवपूजां समाचरेत्।
मण्डलं चतुरस्रन्तु कारयेत् कुसुमाक्षतैः॥
तस्मिन् श्रीशं श्रियं देवीमर्चयेत् सुसमाहितः।
सुहन्तं पयसापूर्णं गन्धेन स्थापयेद्घटं।
चतुरस्तोयपूर्णांस्तु कलशांस्थापयेत् क्रमात्।
मध्ये वावाहयेत् पञ्च चक्रादीन्यायुधान्यपि॥
इन्द्रियाणि तथा पञ्च बुद्धिप्राणं तथा मनः।
त्वमिदेयानि सर्व्वाणि कलशेषु चतुर्ष्वपि॥
मर्त्यापदभ्यस्तरेम्मर्त्त्यशाधिव्याधिभयादपि।
रक्षन्तु सर्व्वदा मान्तु बुद्धिप्राणं मनस्तनः॥
भवन्तु सर्व्वदापन्नो मङ्गलानि दिशन्तु नः।
इति मन्त्रेण चाभ्यर्च्य समिद्धे जातवेदसि॥
षड्भिर्मन्त्रैस्तु जुहुयात् संस्कृते तु यथा विधि।
तिलेनाक्षतयुक्तेन त्रिमध्वक्तेन संयतः॥

१ नाथरति पुस्तकान्तरेपाठः।

मन्त्राः।

अनामयाय पूर्णाय विमलायाच्युताय च।
मृत्यवे कालरूपायेत्येते मन्त्रास्तथा च षट्॥
अथैवायुधमन्त्रैश्च प्राणेन करणैरपि।
हुत्वा तु करणायेति‡ तच्छेषेण बलिन्त्यजेत्॥
अथासने स्थितं साध्यं कृत्वाचार्य्यस्तदग्रतः।
अभिषेकं ततः कुर्य्यात् पयसा तज्जलेन च॥
कुटुम्बिने दरिद्राय निष्कमात्रञ्च हाटकं।
तिलान्नलवणादीनि दद्याद्विप्रगताय च॥
पूर्णकुम्भांस्ततोवास्मै हरिद्राचूर्णसंयुतान्।
बीजपूर्णांस्तु कलशान् लवणेन प्रपूरितान्॥
चतुरश्चतुरोदद्याद्योषिद्भ्यः परमायुषे।
गुरवे च वरं दत्त्वा कृत्वा ब्राह्मणतर्पणं॥
उपवासविधानेन दिनशेषं नयेत्सुधीः।
अनन्तरे च दिवसे कुर्य्याद्भगवदर्चनं॥
बान्धवैः सह भुञ्जीत नियमांश्च विसर्जयेत्।
एवं पर्व्वणि यः कुर्य्याच्चिरञ्जीवी भवेत्स सः॥
सर्व्वव्याधिसमुत्थाने सर्व्वदुःखोदये सति।
स्नानं पर्व्वणि यः कुर्य्यात्तच्छान्तिं सोऽश्नुते परां॥

इति गारुड़पुराणोक्तमायुर्व्रतं।

---

‡ पुरुषायेति पुस्तकान्तरे पाठः।

अगस्त्य उवाच।

सर्व्वेषाञ्चैव पर्व्वणामतिपावनु शङ्करी।
तान्तु पूजय विप्रेशां दृष्टादृष्टप्रदायिकां॥
पर्व्वणान्तुपूज्यता विप्र शाम्भिप्रेश्वरीं।
ब्रह्मणा यो विधिः शक्रे कथितो विजयावहः।
शक्रेण पूर्णिमा तात* श्रावणस्य शुभावहा॥

शक्र उवाच।

विजया या समाख्याता सर्व्वकामप्रसिद्धये।
तामहं श्रोतुमिच्छामि तत्त्वतः सुरसत्तम॥

ब्रह्मोवाच।

पुत्रार्थं राज्यविद्यार्थं यशःसौभाग्यतोऽपि वा।
विजयार्थं शामकामो जयां कुर्व्वीत पूर्णिमां॥
हैमं वा राजतं वापि खड्गं वा अथपादुके।
प्रतिमां वापि कुर्व्वीत सर्व्वलक्षणसंयुतां॥

शाङ्कर्या इति शेषः।

तामादाय शुभे वस्त्रे शुक्लवस्त्रविभूषितां।
यवशाल्यङ्कुरोपेतां पानपात्रविभूषितां॥
दीर्व्वींसुशोभनां वस्त्रैः कल्पयेत्तत्र विन्यसेत्।
हुत्वा हुताशनं मन्त्रैः तत्रदेवीन्तु विन्यसेत्॥
तत्र सयवाङ्कुरादियुक्तायां वेद्यां।
रोचनाचन्दनं चन्द्रैरुपलिप्याथ पूजयेत्॥

* जयेति पूर्णिमातातइति पुस्तकान्तरेपाठः।

नानापुष्पविशेषैस्तु धूपगन्धान्नभोजनैः।
पूजयेद्विधिवद्देवीं तथा वीजानि चाहरेत्॥
यवगोधूममुद्गांश्च शालिषष्टिकशाटकीः।
तिलान्माषान् प्रसृतींश्च श्यामाकाविणरालकान्॥
विल्वाम्रदाडिमकपित्थमोचकापिच्छनागरान्।
बदरान् वीजपूरांश्च उडुम्बर अपीडकान्*॥
दापयेच्चैव देव्यास्तु नैविद्यान्यपराणि च।
आविर्गा आशुव्रीहिः।
ऐरावतं नारिकेलं नारङ्ग कदलीफलं।
नारङ्ग पानीयामलकं।
फलार्थन्तु फलान्येव जपार्थञ्च यवाङ्कुरान्।
पुष्पं सौभाग्यकामाय वस्त्रान्यायुर्धनानि च॥
धनुः शत्रुविनाशाय तत्कामाय तदेव हि।
अन्नं सर्व्वार्थकामाय यथालाभन्तु दापयेत्॥
ततः समापयेद्देवीं विद्यां गृह्णे च पार्थितां†।
विद्याञ्चक्ष्यमाणमन्त्रं।
पुत्रार्थं पूजयेद्बालान्विजयाय स्त्रियो द्विजान्।
धर्म्मार्थञ्चैव भोज्येन मन्त्रितं विद्यया तथा॥
मन्त्रितं भोज्येन भोजयितव्यं व्रतिना।
दक्षिणा तद्ददाचार्ये कन्यकां ब्राह्मणेषु च।
दापयेद्या स्वशक्त्यातु तथा त मनुगृह्णयेत्॥

---

* चपचकामिति पुस्तकान्तरे पाठ।
† प्रार्थयते इति पुस्तकान्तरे पाठ।

भोज्याग्रं पुत्रकामेन ग्रासं विद्याभिमन्त्रितं।
भोक्तव्यं पृथक् पात्रेण न च कुर्व्वीत सङ्करं॥
अनया विधिपूर्व्वन्तु मन्त्रोप्यत्रैव लिख्यते।

ओं यः पृथिव्यां रेततमेहादयतयोमामन्त्रितानि विद्याप्रयच्छत्यष्टौपुत्रान् जनयति वेदवेदाङ्गपारगान्। योऽधीत्य न प्रयच्छत्य पुत्रो नपुंसको भवति। अहं वीर्य्येणाहं बलेन तु ओं नमो भगवते अक्षीणरेतसे स्वाहा रतिकाले वा चिन्तयेद्देवतां तान्त्विदशेखरो।

यस्य रेतेन लोकोऽयं भूषितः पावनो भुवि।
ओं रेताय महारेताय सर्व्ववीर्य्यमहाबले।
कामाय कामदेवाय मम कामान् प्रयच्छतु॥

अनयाभिमन्त्रितं शयनं भजेत्।

प्रयच्छत्यष्टौ पुत्रान् यदिमोहं न गच्छति॥
एवं विद्यां गृहीत्वा तु देवीं नित्यं प्रपूजयेत्।
भवते सर्व्वकामानां सिद्धिरिष्टापराजितां॥
यानीह फलपुष्पाणि उत्पद्यन्ते च प्रावृषि।
तानि देव्याः सकन्यायागुरवेऽपि प्रदापयेत्॥
यथालाभत्तकं वस्त्रं देयं पुष्पफलानि च।
श्रावणी शुभदा या च आश्विनी कार्त्तिकीति वा॥
स्नातव्येतेन विधिना अवश्यं सिद्धिमिच्छता।
होमेन ब्रह्मचर्य्येण वहुमन्त्रोपसाधनात्॥
अपुत्रो लभते पुत्रान् धनं सौभाग्य जीवितं।
अथवा अनघाविद्या लक्षणात्तद्‌ती मिता॥

बीजपूरकबीजानि वटशृङ्गाणि नावनात् ॥
नागकेशरपुष्पाणि कृत्वा यो लभते फलं ।
वृहतीसिता श्वेतवृहती । वट शृङ्गाणि वटाङ्कुराः ।
नावनात् नास्येन
फलसर्प्पिरपांपानात् फलं प्राप्नोति विद्यया ।
अजेयो भवते लोके विद्याधरधनाधिपः ॥
फलसर्पिरायुर्व्वेदसिद्धं ।
एतत्तु सर्व्वमाख्यातं विजयार्थं व्रतोत्तमं ।
सिद्धिदं सर्व्वलोकानां विधिनातूपसेवनात् ॥

इति देवीपुराणोक्तं पुत्रप्राप्तिव्रतं।

———ooo———

मार्कण्डेय उवाच ।

कार्त्तिक्यान्तु तथारभ्य संपूर्णग्रगलवर्ण ।
पूजयेदुदये राजन् सदानक्ताशनोभवेत् ॥
लावणं मण्डलं कृत्वा चन्दनेनानुलेपितं ।
दग्रनक्षत्रसहितं ततः सोमन्तु पूजयेत् ॥
( लावणं सैन्धवलवणकृतं । )
कृत्तिकारोहिणीयुक्तं कार्त्तिके मासि पूजयेत् ।
सौम्यार्द्रासहितं राजन् मासि सौम्ये तथैव च ॥
आदित्यपुष्यसहितं मासि पौषे च यादव ।
मघामर्पयुतं माघफाल्गुणे शृणु पार्थिव ॥

आर्यम्णतोय सावित्रैः सहितं पूजयेद्विभुं ॥
चित्रास्वातियुतञ्चैत्रे वैशाखे शृणु पार्थिव।
विशाखया च मैत्रेण युतं संपूजयेत्तथा ॥
ज्येष्ठामूलयुतं ज्यैष्ठे आषाढाख्यानमुत्तरे।
श्रावणे श्रवणोपेतं वारुणेन श्रविष्ठया ॥
तथाभाद्रपदे पौष्णा अजाह्विर्बुध्नसंयुतं।
अश्विनीभरणीयुक्तं तथा चाश्वयुजे विभुं ॥
(कार्त्तिकादौकृत्तिकादिक्रमेण फाल्गुनश्रावणभाद्रपदेषु त्रीणि त्रीणि।)

गन्धमाल्यनमस्कारदीपधूपान्नसंपदा।
शुभ्रेण परमान्नेन लवणेन घृतेन च ॥
इक्षुणेक्षुविकारैश्च पयसा पायसेन च।
पूज्याश्चाविधवानार्य्यस्तथा तन्नक्षत्रैः शुभैः ॥
ततोऽनन्तरमश्नीयात्तविष्यं प्रयतोनरः।
ब्राह्मणानां व्रतान्ते तु महारजतरञ्जितं ॥
महारजतं कुसुम्भः।
शक्त्या तु वासनं* दद्यान्नारी वा यदि वा नरः।
रूपसौभाग्यलावण्यधनयुक्तोभवेन्नरः।
व्रतेनानेन चीर्णेन स्वर्गलोकञ्च गच्छति ॥
सोपवासश्च यः कुर्याद्व्रतमेतदनुत्तमं।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥
सौभाग्यादि च यत् प्रोक्तं तदाप्नोति विशेषतः।

---

* वसनं दद्यादिति पुस्तकान्तरपाठः।

मनसा काङ्क्षितान् कामान् सर्वानाप्नोत्यसंशयं ॥
अनाभिरामश्च भवाद्दश्वरश्वा
धनाधिपालश्च तथैव लक्ष्म्या।
प्रक्वेच तुल्यश्च तथैव प्रज्ञया
मानुष्यमासाद्य भवेत्स राजा ॥

इति विष्णुधर्मोत्तरोक्तं* मनोरथपूर्णिमा व्रतं।

—ooo—

मार्कण्डेय उवाच।

कार्त्तिके पौर्णमास्यान्तु पूर्वं शिशिरदीधितिं।
पद्मे षोडशपत्रे तु कर्णिकायान्तु पूजयेत् ॥
केशरे पूजयेत्तत्र नक्षत्राण्यष्टविंशतिं।
पत्रेषु तिथिरेवाथर्गततोऽश्वेतश्च पूजयेत् ॥
अग्निब्रह्माम्बिकेभाख्य नागस्कन्दविरीचनाः।
शिवदुर्गायमेन्द्राख्य विष्णुकामशिवेन्दुकाः ॥
पितरश्चेत्यमी प्रोक्ता मुनिभिस्तिथिदेवताः।
गन्धमाल्यनमस्कार दीपधूपान्नसम्पदा ॥
शुभ्रेण परमान्नेन दध्ना च लवणेन च।
अपूपैश्च महाभाग फलैः कालोद्भवैस्तथा ॥
व्रतावसाने दद्याच्च वस्त्रयुग्मं द्विजातये।
ब्राह्मणाय महाभाग महारजतरञ्जितः ॥
पञ्चाशाविधाः सम्यक् कालविद्याश्च तावुभौ।

* सौभविष्योत्तरोक्तं इति पुस्तकान्तरे पाठः।

सोपवासस्त्वभक्ताशी* व्रतमेतत् समाचरेत्।
नक्ताशनो वा धर्म्मज्ञस्तथैव च हविष्यभुक्॥

सौभाग्यदं रूपविवर्द्धनञ्च
लावण्यदं स्त्रीरतिभोगदञ्च।
कार्य्यं प्रयत्नेन नरेन्द्र पुंसा
कार्य्यन्तथा स्त्रीभिरदीनसत्त्वं॥

इति विष्णुधर्म्मोत्तरोक्तं* सौभाग्यव्रतं।

———000———

मार्कण्डेय उवाच।

मार्गशीर्षादथारभ्य चन्द्रमण्डलके नरः।
सोपवासः पौर्णमास्यां पूज्य यज्ञफलं लभेत्॥

यज्ञफलं सर्व्वयज्ञफलं।

नक्ताशनस्तु संपूज्य वह्निष्टोमफलं लभेत्॥
सोपवासश्च नक्ताशी वाजिमेधफलं लभेत्।

सोपवासः सुव्रतः।

कृत्वा व्रतं वत्सरमेतदिष्टं
प्राप्नोति लोकांश्च निशाकरस्य।
उपोष्य कालं सुचिरं सकालं
सायोज्यमायाति तमस्तशम्भोः॥

इति विष्णुधर्म्मोत्तरोक्तं चन्द्रव्रतं।

---

* सोपवासस्तु नक्ताशीति पुस्तकान्तरे पाठः।

● अनक्ताशी एक भक्तोभक्तं सायां वा कार्य्येव च इति पुस्तकान्तरे पाठः।

* भविष्योत्तरोक्तं सौभाग्य व्रत इति पुस्तकान्तरं पाठः।

मार्कण्डेय उवाच ।

प्रोष्ठपदात्समारभ्य संपूर्णं मथिमवत्सरे ।
संपूज्य वरुणं देवं गन्धमाल्यान्नसंपदा ॥
जलाशयजले स्नात्वा एवं संवत्सरं बुधः ।
दद्यात् व्रतावसाने तु जलधेनुं द्विजातये ॥
छत्रोपानहसंयुक्तां वासोयुग्मविभूषितां ।
प्राप्नोति लोकं वरुणस्य राजं
स्तत्रोष्य कालं सुचिरं मनुष्यः ।
मानुष्यमासाद्य भवत्यरोगो
रूपान्वितो वित्तयुतस्तथैव ॥
इति विष्णुधर्मोत्तरोक्तं वरुणव्रतं ।

---

मार्कण्डेय उवाच ।

मार्गसुव्यां* सपूर्व्वन्तु पौर्णमास्यां नरो भुवि ।
सोपवासः सुरेन्द्रञ्च देवं संपूजयेत्तथा ॥
शचीमैरावणन्चव्यं मातुलिङ्गं नराधिप ।
गन्धमाल्यनमस्कार दीपधूपान्नसम्पदा ॥
संवत्सरान्ते कनकञ्च दत्त्वा
प्राप्नोति लोकं सपुरन्दरस्य ।
मानुष्यमासाद्य नरेन्द्रपूज्यो
राजा भवेद्वा द्विजपुङ्गवो वा ॥
इति विष्णुधर्मोत्तरोक्तं शक्रव्रतं ।

---

* मार्गपुण्यम स पूर्व्वमिति पुस्तकान्तरपाठः।

मार्कण्डेय उवाच।

उपोषितश्चतुर्दश्यां पौर्णमास्यां नरोत्तम।
पञ्चगव्यं पिबेत्तत्राद्यविनाशी तथा भवेत्॥
ब्रह्मकूर्चमिदं कृत्वा* सर्वपापात् प्रमुच्यते।
तस्मात्सर्वप्रयत्नेन मासि मासि समाचरेत्॥
संवत्सरात् प्राप्य सुरेन्द्र लोकं
तत्रैव राजा सुचिरं मनुष्यः।
मानुष्यमासाद्य नरेन्द्रपूज्यो
राजा भवेद्वा द्विजपुङ्गवो वा॥

इति विष्णुधर्मोत्तरोक्तं ब्रह्मकूर्चव्रतं।

—000—

कार्त्तिक्यामुपवासी यः कन्यां दद्यात् स्वलङ्कृतां।
स्वकीयां परकीयां वा नदीसङ्गमके शुभे॥
एतत्सन्तानदं नाम व्रतं सुगतिदायकं।

इति भविष्योत्तरोक्तं सन्तानदव्रतं।

—000—

कृष्ण उवाच।

कार्त्तिक्यां नक्तभुक् दद्यान्मेषं हेमविनिर्मितं।
मार्गशीर्षे नृपं पश्येन्मिथुनं तद्वदेव हि॥
एवं क्रमेण यो दद्याद्दासीं वस्त्रविभूषितां।
पौर्णमास्यां पौर्णमास्यां कर्त्तव्यं।

* सवत्पुगमिदं कृत्वा इति पुस्तकान्तरे पाठः।

पौर्णमास्यां पौर्णमास्यां कौन्तेय बहुदक्षिणं।
एतद्राशिव्रतं नाम सर्व्वोपद्रवनाशनं।
सर्व्वाशापूरकं तद्वत्सोमलोकप्रदायकं॥

इति भविष्यत्पुराणोक्तं राशिव्रतं।

---

पयोव्रतः पञ्चदश्यां व्रतान्ते गोयुगप्रदः।
लक्ष्मीलोकमवाप्नोति देवीव्रतमुदाहृतं॥

इति पद्मपुराणोक्तं देवीव्रतं।

---

कालोत्तरात्।

माघशुक्ल चतुर्दश्यामुपोष्य नियमस्थितः।
शिवाय पौर्णमास्यान्तु कर्त्तव्यं घृतकम्बलं॥
कृष्णगोमिथुनं पश्चात् सुरूपं विनिवेदयेत्।
दिव्यं वर्षशतं साग्रं शिवलोके महीयते॥

शिवधर्म्मे।

आलिङ्गवेदिपर्य्यन्तं यो दद्याद्घृतकम्बलं।
तस्यानन्तं भवेत्पुण्यं माघपूर्णिमपर्व्वणि॥
जागरं गीतनृत्याद्यैः सकृत् कृत्वा तु पर्व्वणि।
मन्वन्तरशतं साग्रं रुद्रलोके महीयते॥
इति शिवधर्म्मोत्तरोक्तो घृतकम्बलविधिः।
पौर्णमास्यान्तु यः सोमं पूजयेद्भक्तिमान्नरः॥

सौभाग्यत्वं भवेत्तस्य इति मे निश्चिता मतिः ॥
मूलमन्त्राः समस्ताभि रङ्गमन्त्राश्च कीर्त्तिताः ।
पूर्व्ववत्पञ्चपक्षस्य: कर्त्तव्यस्तातिथीश्वरः ॥

तिथीश्वरः सोमः तद्रूपश्च चतुर्दशीस्थितमहाराजव्रतोक्त विहितव्यं ।

गन्धपुष्पोपहारैश्च यथाशक्ति विधीयते ।
पूजाशाठ्येन शाठ्येन कृतापि तु फलप्रदा ॥
आज्यधारासमिश्रैश्च दधिक्षीरान्नमाक्षिकैः* ।
पूर्व्वोक्तफलदो होमः कृतः शान्तेन चेतसा ॥
एतद्व्रतं वैश्वानरप्रतिपद्व्रतवद्वास्येयं ।

इति भविष्यत्पुराणोक्तं सोमव्रतं ।

——ooo——

भोजनं घृतसंयुक्तं मधुनोपरिशोभितं ।
दद्यात् कृष्णतिलानान्तु प्रस्थमेकन्तु माधवं ॥
त्रिगुणन्तण्डुलानाञ्च पृथक्प्रस्थं प्रकल्पयेत् ।
स्थलजैर्व्वारिजैर्व्वापि विविधं परिवेष्टितं ॥
अण्डजानि कौशेयानि वाल्कजानि कार्पासानि ।
लिङ्गं संवेष्ट्य मन्त्रैश्च बलिमेतं निवेदयेत् ।
अर्च्चयित्वा विधानेन पौर्णमास्यां समाहितः ॥
युगकोटिसहस्राणि* शिवलोके महीयते ।

---

* पायसान्नैर्नवैर्नवैरिति पुस्तकान्तरे पाठः ।

* पुराकोटि सहस्राणीति पुस्तकान्तरे पाठः ।

पुण्यक्षयादिहागत्य समृद्धे जायते कुले ॥
मेधावी सुभगः श्रीमान्वेदवेदाङ्गपारगः ।

इति श्रीशिवधर्म्मोक्तं घृतभाजनव्रतं ॥

पौर्णमास्यामुपवसेदब्दमेकं सुयन्त्रितः ।
वर्षान्ते सर्व्वगन्धाग्र्यां प्रतिमाञ्च निवेदयेत् ॥
सुविचित्रैर्म्महायानैर्द्दिव्यगन्धविभूषितैः ।
युग कोटि शतं साग्रं शिवलोके महीयते ॥
यथेष्टमैश्वरे लोके भोगमासाद्य यत्नतः ।
क्रमादागत्य लोकेऽस्मिन् राजानं पतिमाप्नुयात् ॥

इति शिवधर्म्मोक्तं गन्धव्रतं ।

सनत्कुमार उवाच ।

उपोष्य च चतुर्द्दश्यां पौर्णमास्यां हरिं यजेत् ।
चैत्रे मासि निकुम्भश्च पिशाचैः सहितो बली ॥
यातियोद्धुं पिशाचांश्च सिकताद्वीपवासिनः* ।
तदन्ते गच्छतां तेषां मध्याह्ने तु गृहे गृहे ॥
पूजा कार्य्या प्रयत्नेन नित्यं शक्त्या यथाक्रमं ।
पिशाचं मृन्मयं कृत्वा रम्यं तृणमयञ्च वा ॥
गन्धैर्म्माल्यैस्तथा वस्त्रैरलङ्कारैर्म्मनोहरैः ।
भक्ष्यैस्तु पूरिकापूपैर्म्मांसैर्हृद्यैश्च पानकैः ॥

* सिन्धुद्वीपनिवासिन इति पुस्तकान्तरे पाठः ।

स्वजातिविहितैः पेयैर्नैवेद्यैश्च पृथग्विधैः।
आयुधैर्विविधाकारैश्चक्रोपानह्ययष्टिभिः॥
मुष्कान्नपूरिकायुक्तैश्चिरैर्भक्षैश्च भक्तया।
मिश्रउद्दालपिष्टैर्वा ठक्कावाद्यैश्च चर्मणा॥
तन्त्रीवाद्यैर्मनोज्ञैश्च तथा पार्श्वोपयोगिभिः।
मध्याह्ने तन्तु संपूज्य प्रान्ते चन्द्रोदये पुनः॥
पूर्ववत् पूजयेत्तन्तु वित्तशाठ्यविवर्जितः।
ततः कृत स्वस्त्ययनो ब्राह्मणस्तं विसर्जयेत्॥
अनुव्रजेद्ययेतन्तु द्वितीये दिवसे सति।
गृहाद् दूरंयोयस्य पश्चं तस्तु महीरुहात्॥
पुनर्गृहे प्रविश्यैव कर्त्तव्यः सुमहोत्सवः।
गीतवादित्रनिर्घोषो जनकोलाहलस्तथा॥
कृत्वा तृणमयं सर्पं दृढैः काष्ठैस्तु वेष्टितं।
क्रीडितव्यं पुनर्ग्रामनगरेषु च सर्व्वदा॥
तत्रासो दुष्टसर्पाणां तत्क्षणाद्येन जायते।
त्रिभिश्चतुर्भिर्दिवसैः कर्त्तव्यं खण्डखण्डकं॥
सर्व्वोपस्कारसम्पन्न नवखण्डं गृहे गृहे।
पूजितव्यं सुगुप्ते तु रक्षितव्यञ्च वत्सरं॥

इत्यादि पुराणोक्ता निकुम्भपूजा।

———ooo———

कार्त्तिक्यां यो वृषोत्सर्गं कृत्वा नक्तं समाचरेत्।
शैवं पदमवाप्नोति वृषव्रत मिदं स्मृतं॥

इति पद्मपुराणोक्तं वृषव्रतं।

या प्रेरयति कर्म्माणि लोकेषु द्विजसत्तम।
तस्याः संपूजनं कार्यं शुक्लपञ्चदशीं सदा॥
माल्यानुलेपनैः शुक्लैर्धूपेन च सुगन्धिना।
रत्नवस्त्रप्रदानेन दीपदानेन चाप्यथ॥
नैवेद्यैश्च तथाभक्ष्यैरपूपैर्घृतवैव च।
पूजयित्वा च तां देवीं भोक्तव्यं निशि भार्य्यया॥
यदि पञ्चदशीं सर्व्वां न शक्नोति कथञ्चन।
देव्याः संपूजनं कार्यं पक्षमपि कार्त्तिके॥
उमान्तु* पूजयेद्यात्तु सा तु नारी पतिव्रता।
सदा धर्म्मरता नारी लोके भवति भार्गव॥
नाशुभे च मतिस्तस्याः कदाचिदपि जायते॥

इति विष्णुधर्म्मोत्तरोक्तं पूर्णिमाव्रतं।

---

प्राप्य पञ्चदशीं राम तथा शुक्लाञ्च कार्त्तिकीं।
सारामच्छदभित्तिं वै उमां शौच समालिखेत्॥
तस्याद्वारि गृहे वापि नानावर्णैस्तु वर्णिकं।
गृहोपकरणं सर्व्वं तयोश्चैवाभितो लिखेत्॥
पीतं यथासमान्यन्तु सकटीमुखनाभिकं।
ततस्तौ पूजयेन्नारी स्नात्वा भर्त्तृपरा शुचिः॥
गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा।
इक्षुणा तु विकारैर्वा विविधैश्च च पूजयेत्॥

* उपार्जितमिति पुस्तकान्तरे पाठः।

तयोस्तु पूजनं कृत्वा पश्येत्तु सिकतामयं।
शुक्लांशेषं न्यसेत् क्षीरं तच्चदद्याद्द्विजातये॥
ततश्च नक्तं भुञ्जीत तिलतैलविवर्जितं।
अनयोः पूजनाद्द्या तु गृहभङ्गन्तु नाप्नुयात्॥
पतिव्रता महाभागा दीर्घमाप्नोति जीवितं।
पूर्णमिन्दुं ततोऽभ्यर्च्य सौभाग्यं महदाप्नुयात्॥
इष्टग्रहमथाभ्यर्च्य नक्षत्रमथ वा नृप।
तस्याःक्षेममवाप्नोति कामञ्च यदुनन्दन
मासनामसनक्षत्रं पूर्णिमायोगपञ्च वा।
पूजयित्वा तदाराजन् सौभाग्यं महदाप्नुयात्॥
नृसिंहप्रतिबद्धन्तु पूर्णचन्द्रं समर्चयेत्।
नरोमालगणा राजन् सर्व्वान् कामानवाप्नुयात्॥
एकां वा मातरं राजन् कामानाप्नोत्यभीप्सितान्।
वानस्पत्यमवाप्नोति पूजयित्वा वनस्पतीन्॥

इति विष्णुधर्मोक्तं नानाफलपूर्णिमाव्रतं।

---

श्रावण्यां पौर्णमास्याञ्च सोपवासो जितेन्द्रियः।
प्राणायामशतं कृत्वा मुच्यते सर्व्वकिल्बिषैः॥

इति वह्निपुराणोक्तं पूर्णिमाव्रत।

---

चन्द्रव्रतं पञ्चदश्यां शुक्लायां नक्तभोजनं॥
दश पञ्च च वर्षाणि व्रतमेतत् समाचरेत्।

अश्वमेधसहस्राणि राजसूय शतानि च ॥
इष्टानि तेन राजेन्द्र एतद्व्रतं समाचरेत् ।

इति वाराहपुराणोक्तं चन्द्रव्रतं ।

---

ईश्वर उवाच ।

ज्येष्ठस्य पौर्णमास्यान्तु दम्पती यस्तु भोजयेत् ।
परिधाय यथा शक्त्या दौर्भाग्यैर्मुच्यते नरः ॥
गन्धपुष्पोपहारैश्च पौर्णमास्यान्तु योऽर्चयेत ।
ब्राह्मण्यं जायते तस्य सप्तजन्मनि सुन्दरि ॥

इति प्रभासखण्डोक्तं ब्राह्मण्यावाप्तिव्रतं ।

इति श्रीमहाराजाधिराजश्रीमहादेवस्य सकलकरणा-
धीश्वरसकलविद्याविशारदश्रीहेमाद्रिविर-
चिते चतुर्वर्गचिन्तामणौ व्रतखण्डे
पूर्णिमाव्रतानि ।

---

# अथ विंशोऽध्यायः।

## अथामावास्याव्रतानि।

येनाखर्वं बलिभिरनिशन्तर्पितो नागलोको*
राज्ञश्चिह्नामिव प्रणयिनां जन्यमानो न भुंक्ते।
सोऽयं साधुद्विजपरिवृतः सूरिहेमाद्रिरस्मि-
न्नामावास्याव्रतसमुदयं ख्यातमाख्यातिकीर्त्तिः॥

अगस्त्य उवाच।

भगवंस्त्वत् प्रसादेन श्रुतोऽयं व्रतविस्तरः।
अर्द्धोदयन्तु मे ब्रूहि दुर्लभं सचराचरे॥
जीवितं प्राणिनां पुण्यं यदि चेद्वदसि प्रभो।
कथं कार्य्यं-कृते किं स्यात् फलं कथय षण्मुख॥
श्रूयतां पुण्ययोगोऽयं दुर्लभोऽर्द्धोदयाह्वयः।
तिर्य्यङ्मनुष्यदेवानां दुष्प्राप्यं सर्व्वकामदं॥
माघामायां व्यतीपात आदित्ये विष्णुदैवते।
अर्द्धोदयं तदित्याहुः सहस्रार्कग्रहैः समं॥
पुराकृतं वसिष्ठेन जामदग्न्येन सुव्रत।
सनकाद्यैर्मनुष्यैश्च बहुभिर्बहुभिःश्रुतैः॥
अब्दैः शतसहस्रैश्च दृष्टं भवतु कुम्भज।
स्नानानां यत्र तीर्थानां फलं येन कृतं भवेत्॥

---

* नागलोक इति पुस्तकान्तरे पाठः।

ससागरा धरा तेन सप्तद्वीपसमन्विता ।
दत्ता स्यात् सर्व्वभावेन येन ह्यर्द्धोदयं कृतं ॥
मानसादिषु तीर्थेषु यत्पुण्यं स्नानदानतः ।
गङ्गासागप्रयागे च पुष्करार्चापथे तथा ॥
तत्सर्व्वं वा न वा विप्र व्रतेनानेन कुत्रज ।
अश्वमेधायुतं श्रेष्ठमिष्टापूर्त्तं च यद्भवेत् ॥
अर्द्धोदयव्रतं यैस्तु विधिदृष्टेन कर्म्मणा ।
वाजि नव्रं गृहे लक्ष्मीः सन्ततिश्चानपायिनी ॥
आयुर्य्यशोहि विपुलं व्रतकर्त्ता फलं लभेत् ।
इन्द्राग्नियमलोकेषु निर्ऋतीशामपांपतेः ॥
वायोः कुबेरशेषस्य लोकेषु सुकृती प्रभुः ।
वसेच्चन्द्रार्कलोकेषु लोकपालैश्च सेवितः ॥
गोकोटिदानाद्यत् पुण्यं क्षेत्रतीर्थनिवासिनां ।
अर्द्धोदयजपुण्यस्य कलां नार्हन्ति षोडशीं ॥
भूर्लोकाधिपतिश्चैव भुवर्लोकाधिपस्ततः ।
स्वर्लोकेशो जनानाञ्च तपोलोकस्य चेश्वरः ॥
महर्लोके वसेन्नित्यं यावदिन्द्राश्चतुर्दश ।
ततो हिरण्यगर्भस्य पुरुषो व्रतकारकः ॥
तस्य लोकाधिपः साक्षी लोकानां पुरुषोव्ययः ।
अर्द्धोदयप्रसादेन ब्रह्मलोके वसेत्ततः ॥
तथा दानेन विष्णुत्वं ब्रह्म रुद्रस्तथा भवेत् ।
शिव लोके गुणैः पूज्यो देवराजसमन्वितः ॥
वसेच्छाक्रेण मानेन व्रतस्यास्य प्रभावतः ।

ततो विष्णुस्वरूपेण त्रैलोक्याधिपतिर्भवेत् ॥
शङ्खचक्रगदाधारी वनमाली हरिः स्वयं ।
व्रतप्रभावाल्लक्ष्मीशो देवो नारायणो भवेत् ॥

अगस्त्य उवाच ।

स्कन्द केन विधानेन कर्त्तव्यं व्रतमुत्तमं ।
सर्व्वोदय मनुष्याणां जीवितं दुर्लभं भुवि ॥

स्कन्द उवाच ।

कृते कृतं वसिष्ठेन त्रेतायां रघुणा कृतं ।
द्वापरे धर्म्मराजेन कलौ पूर्णोदरेण च ॥
अन्यैर्देवमनुष्यैश्च दैत्यैश्च द्विजसत्तम ।
कृतमर्क्कोदयं सम्यक् पूर्णकामफलप्रदं ॥
माघमासे कृष्णपक्षे पञ्चदश्यां रवेर्दिने ।
वैष्णवेन चऋक्षेण व्यतीपाते सुदुर्लभे ॥

वैष्णवर्क्षं श्रवणं ।

पूर्व्वाह्णे सङ्गमे स्नात्वा शुचिर्भूत्वा समाहितः ।
सर्व्वपापविशुद्ध्यर्थं नियमस्थो भवेन्नरः ॥
त्रिदैवत्यंव्रतं देवाः करिष्ये भुक्तिमुक्तिदं ।
भवन्तु सन्निधौ मेऽद्य त्रयोदेवास्त्रयोऽग्नयः ॥

इति नियममन्त्रः ।

ब्रह्मविष्णुमहेशानां सौवर्णपलसंख्यया ।
कर्त्तव्यार्चा तदर्द्धेन तदर्द्धेन द्विजोत्तम ॥
शय्यं शतत्रयं गर्भोद्रोणानां तिलपर्व्वतः ।

अथ पूजनं यथा।

कर्त्तव्यो विष्णुरुद्राद्यैर्हरः पूर्व्वोक्तसंख्यया।
शय्यात्रयं ततः कुर्य्यादुपस्करसमन्वितं॥
देवानां त्रयमुद्दिश्य कर्त्तव्यं भक्तिशक्तितः।
ब्रह्मविष्णुशिवप्रीत्यै दातव्यन्तु गवां त्रयं॥
हिरण्यभूमिधान्यादिदानं विभवसारतः।
दातव्यं त्रययोपेतं[1] ब्राह्मणेभ्यः प्रयत्नतः॥
मध्याह्ने तु नरः स्नात्वा शुचिर्भूत्वा समाहितः।
तिलपर्व्वतमध्यस्थं पूजयेत् देवतात्रयं॥

आदौ ब्रह्मपूजा।

नमो विश्वसृजे तुभ्यं[2] सत्याय परमेष्ठिने।
देवाय देवपतये यज्ञानां पतये नमः॥
ओं ब्रह्मणे नमः पादौ हिरण्यगर्भाय नम ऊरुभ्यां।
धात्रे नमो जानुभ्यां जङ्घाभ्यां परमेष्ठिने नमः।
वेधसे नमो गुह्ये पद्मोद्भवाय वै नमो ऽस्तौ।

हंसवाहनाय नमः कटिदेशे शतानन्दाय वक्षसि नमः सावित्रीपतये नमोनमोस्तु बाहुषु। ओं ऋग्वेदाय नमः पूर्व्ववक्त्रे यजुर्व्वेदाय नमो दक्षिणवक्त्रे। सामवेदाय नमः पश्चिमवक्त्रे। अथर्व्ववेदाय नमः उत्तरवक्त्रे। ओं चतुर्वक्त्राय नमः शिरसि। कपोलौ ओं कपालाय नमः।

---

१ त्रययोपेतमिति पुस्तकान्तरे पाठः।

२ पूर्व्वमिति पुस्तकान्तरे पाठः।

ततः कार्य्या लोकपालपूजा विप्रैः समन्ततः।
हिरण्यगर्भ पुरुषप्रधानाव्यक्तरूपवत्॥
प्रसीद सुमुखो भूत्वा पूजां गृह्ण नमोऽस्तु ते।

ब्रह्मप्रार्थनमन्त्रः।

नारायण जगन्नाथ नमस्ते गरुड़ध्वज।
पीताम्बर नमस्तुभ्यं जनार्द्दन नमोऽस्तु ते॥

अनन्ताय नमः पादौ विश्वरूपाय ते नमः मुकुन्दाय नमो जानुभ्यां ऊरुभ्यां गोविन्दाय नमो जङ्घाभ्यां। गुह्ये प्रद्युम्नाय नमः पद्मनाभाय नमो नाभौ। भुवनोदराय नम उदरे वक्षसि कौस्तुभवक्षसे नमः। चतुर्भुजाय नमो बाहुषु वदने विश्वतोमुखाय नमः। नमः सहस्रशिरसे देवायानन्ताय मौलौ।

आदित्य चन्द्रनयन दिग्बाहो दैत्यसूदन।
पूजां दत्तां मया भक्त्या गृहाण करुणाकर[1]॥

इति विष्णुप्रार्थनामन्त्रः।

महेश्वर महेशान नमस्ते त्रिपुरान्तक।
नमो जीमूतकेशाय नमस्ते वृषभध्वज॥
ईशानाय नमः पादौ जङ्घाभ्यां चन्द्रशेखरः।
जानुभ्यां पशुपतिर्देव ऊरुभ्यां शङ्करः स्मृतः॥
उमाकान्ताय गुह्ये तु नाभौ वै नीललोहितः।
उदरे कृत्तिवाससे वक्षो नागोपवीतिने॥
भोगिरूपाय वै बाहौ नीलकण्ठस्तु कण्ठगः।

---

१ करुणापर इति पुस्तकान्तरे पाठः।

मुखे वै पञ्चवक्त्राय मौलौ चैव कपर्दिने ॥
अन्धकारि प्रमेयात्मन् नमो लोकात्मकाय च।
पूजां दत्तां मया भक्त्या गृहाण वृषभध्वज ॥

इति महेश्वरप्रार्थनमन्त्रः।

इति पूजाक्रमः प्रोक्तो मन्त्रैरेतैः प्रयत्नतः ॥
आचार्य्यं पूजयेद्भक्त्या वस्त्रालङ्कारभूषणैः।
कुसुमाला कर्णमाला पीठछत्रं कमण्डलुः॥
सितवस्त्रयुगं देयं ब्रह्मणे सर्व्वमूर्त्तये।
पीतवस्त्रयुगं विष्णो[१] लोहितं शङ्करस्य च ॥
पञ्चामृतेन स्नपनं पूजनं कुसुमैः स्रकैः।
कमलैरुत्पलैर्नीपैर्बिल्वपत्रैरखण्डितैः॥
तत्कालसम्भवैर्दिव्यैः पूज्या देवा यथाक्रमं।
यथाशक्त्या प्रकर्त्तव्यं व्रतमेतत् सुदुर्लभं ॥
जीवितं प्राणिनामेतदनित्यं निश्चितं यतः।
अथ व्रताङ्गहोमस्य विधानं शृणु तत्त्वतः॥
देवतात्रयमुद्दिश्य शास्त्रदृष्टेन कर्म्मणा।
प्रजापते विश्वरूपाय रुद्राय च नमो नमः।
इत्यनेनैव मन्त्रेण वह्निं संस्थाप्य भक्तितः।
ततो होमं प्रकुर्व्वीत यथाविभवसम्भवं ॥
अग्नये प्रजापतये स्वाहा। अग्नये विष्णवे स्वाहा।

---

१ वस्त्रमिति पुस्तकान्तरे पाठः।

अग्नये रुद्राय स्वाहा। एवं विश्व होमः१। प्रजापते नत्वदेतान्यान्येन मन्त्रेण प्रजापतये। इदं विष्णुरिति विष्णवे। त्र्यम्बकमिति महादेवाय। इत्येतैर्मन्त्रैर्घृतहोमः२।

ब्रह्मणे विष्णवे महादेवाय स्वाहेति पूर्णाहुत्या सर्व्वान् कामान वाप्नोति प्राप्नोति होमोव्रताङ्गहोमः।

अथ होमावसानेच गाञ्च दद्यात्पयस्विनीं।
स्वर्णशृङ्गीं रौप्यखुरां घण्टाभरणभूषितां॥
ताम्रपृष्ठीं कांस्यदोहां सर्व्वोपस्करसंयुतां।
सदक्षिणां सुशीलाय आचार्य्याय निवेदयेत्॥
तेन दत्तं हुतं जप्तमिष्टं यज्ञैः सहस्रधा।
कृतकृत्यो भवेद्विप्र व्रतस्यास्य प्रभावतः॥
एतत्सर्व्वं मयाख्यातं दुर्लभं व्रतमुत्तमं।
अर्द्धोदयं यथा दृष्टं किमन्यत् श्रोतुमिच्छसि३॥

इति स्कन्दपुराणोक्तमर्द्धोदयव्रतं।

———ooo———

अमावस्यां निराहारः अब्दमेकं नियन्त्रितं।
शूलपिष्टमयं कृत्वा वर्षान्ते विनिवेदयेत्॥
शिवाय राजतं पद्मं सौवर्णं कृतकर्णिकं।
भक्त्या च विन्यसेत् मूर्ध्नि शेषं४ पूर्व्ववदाचरेत्॥

---

१ एवमिष्टचरुहोमइति पुस्तकान्तरे पाठः।
२ चरुहोमइति पुस्तकान्तरेपाठः।
३ परिपृच्छतीति पुस्तकान्तरेपाठः।
४ शम्भुमिति पुस्तकान्तरे पाठः।

कामतोऽपि कृतं पापं भ्रूणहत्यादिकञ्च यत् ।
तत्सर्व्वं शूलदानेन हत्वा नारीर्न संशयः ॥
महापद्मविमानेन नरो नारीसमन्वितः ।
युगकोटिशतं साग्रं शिवलोके महीयते ॥

पूर्व्ववदिति अहिंसा ब्रह्मचर्य्यं भूशयन पाषण्डालापादिक-
माचरेदित्यर्थः ।

ईशलोकादिलोकेषु भुक्त्वा भोगाननेकशः ।
इह लोके क्रमात्प्राप्य यथेष्टं पतिमाप्नुयात् ॥

इति शिवधर्म्मोक्तं शूलदानव्रतं[1] ।

———000(D)000———

अगस्त्य उवाच ।

सर्गादौ ब्रह्मणा सृष्टास्तमूचुः पितरस्तदा ।
वृत्तिर्नो धेहि भगवान् यथावद्विधिहेवयं ॥

ब्रह्मोवाच ।

अमावास्यादिना वोऽस्तु तस्यां तिलकुशोदकैः ।
तर्पिता मानुषैस्तृप्तिं परां गच्छन्तु नान्यथा ॥
तिला देयास्त्वेतस्यानुपोष्य पितृभक्तितः ।
चिराय तस्य सन्तुष्टा वरं यच्छन्तु मा चिरं ॥
तस्मादस्यान्तिथौ विप्रामेतत्सर्व्वं समाचरेत् ।

इति वराहपुराणोक्तं पितृव्रतं ।

———000———

१ विष्णुधर्म्मोत्तरोक्तं शिवव्रतमिति पुस्तकान्तरे पाठः ।

ब्रह्मोवाच।

पितरः अदितिः विष्वे रिष्टाः कुर्व्वन्ति सर्व्वदा।
प्रजाहृष्टिं धनं रक्षामायुष्यं वलमेव च॥
मूलमन्त्राः ससंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः।
गन्धपुष्पोपचारैश्च यथाशक्ति विधीयते॥
पूजापाठेन पाठेन क्वतापि तु फलप्रदा।
आज्यधारासमिश्रैश्च दधिक्षीरान्नमाषिकैः॥
पूर्व्वोक्तफलदो होमः क्वतः शान्तेन चेतसा१।
एतद्व्रतं वैश्वानरप्रतिपद्व्रतवद्व्याख्येयं।

इति भविष्यत्पुराणोक्तं पितृव्रतं।

——oo(।)oo——

पुलस्त्य उवाच।

वर्षमेकं भवेद्यस्तु पञ्चदश्यां पयोव्रतः।
पञ्चदश्यामित्यमावास्यायां पुराणान्तरसंवादात्॥
समाप्ते श्राद्धक्वद्यात्२ गवः३ पञ्च पयस्विनीः।
वासांसि च विचित्राणि जलकुम्भयुतानि च॥
स याति वैष्णवं लोकं पितॄणां तारयेच्छतं।
जन्मान्तरे भवेद्राजा पयोव्रतमिदं स्मृतं॥

इति पद्मपुराणोक्तममावस्यापयोव्रतं।

——o——

१ परमात्मेन चेतसेति पुस्तकान्तरे पाठः।
२ श्रद्धावाद्द्यादिति पुस्तकान्तरे पाठः।
३ गावइति पुस्तकान्तरे पाठः।

मार्कण्डेय उवाच ।

प्रभास्वरा बर्हिषद अग्निष्वात्तास्तथैव च ।
क्रव्यादाश्चैव भूताश्च आज्यपाश्च सुकालिनः ॥
पूज्याः पितृगणा राजन् सोपवासेन नित्यशः ।
चैत्रे कृष्णादथारभ्य पञ्चदश्यां नराधिप ॥
आहन्यहनि कुर्वीत यावत् संवत्सरं भवेत् ।
गन्ध-माल्य-नमस्कार-धूप दीपान्नसम्पदा ॥
संवत्सरान्ते दद्याच्च तथा धेनुं पयस्विनीं ।
ब्राह्मणाय महाभाग पितृभक्ताय यक्षितः१ ॥

कृत्वा व्रतं वत्सरमेतदिष्टं
प्राप्नोति लोकान् स तथाच तेषां ।
तत्रैव कालं सुचिरं सुखी स्यात्
प्राप्नोति मोक्षं पुरुषप्रधानः२ ॥

इति विष्णुपुराणोक्तं पितृव्रतं ।

——000——

श्रीमार्कण्डेय उवाच ।

कृष्णपक्षे पञ्चदश्यां चैत्रादारभ्य यादव ।
वह्निसंपूजनं कृत्वा गन्धमाल्यान्नसम्पदा ॥
तिलहोमस्तथा कुर्यान्नाम्ना वह्नेर्नराधिप ।
संवत्सरान्ते दद्याच्च सुवर्णं ब्राह्मणाय च ॥

---

१ भक्षित इति पुस्तकान्तरे पाठः ।
२ सुरप्रधान इति पुस्तकान्तरे पाठः ।

कृत्वा व्रतं वत्सरमेतदिष्टं
प्राप्नोति वित्तं सततं यशश्च ।
धर्मं मतीरूपमनुत्तमञ्च
कामान् यथेष्टान् पुरुषप्रधानः ॥

इति विष्णुपुराणोक्तं वह्निव्रतं ।

———000———

मार्कण्डेय उवाच ।

अमावास्यान्तवेलायां सोपवासो नरोत्तम ।
पद्मद्वये पूजयन्ति चन्द्रार्कौ विकराग्रिणौ ॥
आदित्यमष्टदलके शशिनं षोड़शाकरे ।
आदित्यं सर्व्वरत्नेन चन्द्रं मुक्तेन यादव ॥
मात्स्यादिना महाभाग होमयेत्तिलतण्डुलान् ।
घृतक्षीरयुतान् राजन् तथार्च्चयेद्य[1]थाविधि ।
व्रतान्ते ब्राह्मणेन्द्राय कनकं[2] प्रतिपादयेत् ॥
रजतञ्च महाभाग य इच्छेद्भूतिमात्मनः ।
कृत्वा व्रतं वत्सरमेतदिष्टं
दद्याच्च दीपान् विधिवत् प्रभूतान्
चान्द्रं पदं प्राप्य विवर्द्धते सदः
धनान्वितः स्यात्त्रिदिवे इहैव ॥

इति विष्णुधर्म्मोत्तरोक्तं चन्द्रव्रतं[3] ।

---

१ यथोर्ध्वमादरिति पुस्तकान्तरे पाठः।

२ करकमिति पुस्तकान्तरे पाठः।

३ चन्द्रकव्रतमिति पुस्तकान्तरे पाठः।

भगवानुवाच।

अमावस्यामनुप्राप्य ब्राह्मणाय कुटुम्बिने।
यत् किञ्चित् वेदविदुषे दद्यादुद्दिश्य शङ्करं॥
प्रीयतामीश्वरः सोमो महादेवः सनातनः।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति॥

इति कूर्म्मपुराणोक्तममावास्याव्रतं।

---

अमावस्यायां ब्रह्माणं समुद्दिश्य पितामहं।
ब्राह्मणांस्त्रीन् समभ्यर्च्य मुच्यते सर्व्वपातकैः॥

इति कूर्म्मपुराणोक्तममावास्याव्रतं।

इति श्रीमहाराजाधिराज-श्रीमहादेवस्य-सकल-करणा-
धीश्वर-सकलविद्या-विशारद-श्रीहेमाद्रिविरचिते
चतुर्व्वर्गचिन्तामणौ व्रतखण्डे
अमावस्याव्रतानि॥

---

## अथ एकविंशोऽध्यायः।



अथ नानातिथिव्रतानि।

प्रत्येकमुक्तेषु तिथिव्रतेषु

लब्ध्वावकाशं पुनराददे तत्।

हेमाद्रिरत्यन्तफलप्रदायि

नानातिथीनां व्रतवृन्दमात्र॥

युधिष्ठिर उवाच।

स्मारयामि हृषीकेश यत्प्रोक्तं भवता मम।

तत्साविचीव्रतं ब्रूहि प्रसादसुमुखो भव॥

श्रीकृष्ण उवाच।

कथयामि कुलस्त्रीणां महिम्नोवर्द्धनं परं।

यथा चीर्णं व्रतं पूर्व्वं सावित्रा राजकन्यया॥

आसीन्महीन्द्रो धर्मात्मा सर्व्वभूतहिते रतः।

पार्थिवोऽश्वपतिर्नाम पौरजानपदप्रियः॥

सर्व्वश्वरोऽनपत्यश्च सत्यवाक् संयतेन्द्रियः।

स सभार्य्यो व्रतमिदञ्चकारापत्यकाम्यया॥

साविचीति प्रसिद्धं यत् सर्व्वकामप्रदायकं।

तस्य तुष्टा तु सा देवी सावित्री ब्रह्मणः प्रिया॥

भूर्भुवः स्वरितीत्यस्याः साचान्मूर्त्तिरिह स्थिता।

कमण्डलुधरा देवी वरदा स्मितभाषिणी ॥
उवाच दुहिता ह्येका तव राजन् भविष्यति ।
तस्याः प्रसादाद्ध्येतत्सर्व्वं तव समागतं ॥
मन्नाम्ना सा च वक्तव्या महाकीर्त्तिमती तु सा ।
भविष्यति महाराज मा शोकं कर्त्तुमर्हसि ॥
एवमुक्त्वा तु सा देवी जगामादर्शनं तदा ।
कालेन बहुना जाता दुहिता देवरूपिणी ॥
सावित्रीप्रीतये हुत्वा सावित्र्यापूजया तथा ।
आदिष्टा चैव सावित्र्या सावित्रीसदृशी यतः ॥
सावित्रीत्येवनामास्याश्चक्रु विप्रास्तथापि सा ॥
सावित्री विग्रहवती१ व्यवर्द्धत पितुर्गृहे ।
काले बहुतिथे याते यौवनस्था बभूव सा ॥
सा सुमध्या पृथुश्रोणी प्रतिमां काञ्चनीमिव ।
प्राप्तेयं देवकन्येति संभ्रमं मेनिरे जनाः ॥
सा तु पद्मपलाशाक्षी प्रज्वलन्तीव तेजसा ।
चचार सापि सावित्रीव्रतं तद्गुरुणोदितं ॥
अथोपोष्य शिरः स्नाता सम्यक् सम्पूज्य देवताः ।
हुत्वाग्निं विधिवद्विप्रान् वाचयित्वेन्दुपर्व्वणि ॥
तेभ्यः सुमनसो मूर्ध्ना प्रतिगृह्य नृपात्मजा ।
सखीपरिवृताभ्येत्य२ देवश्रीरिव रूपिणी ॥

---

१ साश्रीकविग्रहवतीति पुस्तकान्तरे पाठः ।

२ भर्त्येरिति पुस्तकान्तरे पाठः ।

साभिवाद्य पितुः पादौ विनीता चारुहासिनी।
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वतः स्थिता॥
तां दृष्ट्वा यौवनप्राप्तां स्वां सुतां देवरूपिणीं
उवाच राजा संमन्त्र्य मृत्यर्थं सह मन्त्रिभिः॥
पुत्री प्रदानकालास्ति नच कश्चिद्वृणोति मां।
विचारयन्[1] पश्यामि वरं तुल्यमिहात्मनः॥
तथापि देयासि मया दोषः स्यादन्यथा मम।
देवादीनां तथा वाच्यो न भवेय तथा कुरु॥
पठ्यमानं मया पुत्रि धर्मशास्त्रेषु विश्रुतं।
पितुर्गेहे तु या कन्या रजः पश्यत्यसंस्कृता॥
ब्रह्महत्या पितुस्तस्य सा कन्या वृषली स्मृता।
अतोऽत्र प्रेषयामि त्वां कुरु पुत्रि स्वयम्बरं॥
वृद्धैरनुमतासि त्वं शीघ्रं गच्छ च मा चिरं।
देवादीनां यथा वाच्यो न भवेयं तथा कुरु॥
एवमस्त्विति सावित्री प्रोक्ता शीघ्रं विनिर्ययौ।
स्यन्दनेन महार्हेण मन्त्रिभिः परिवारिता॥
तपोवनानि रम्याणि राजर्षीणां जगाम सा।
मान्यानां तत्र वृद्धानां कृत्वा पादाभिवन्दनम्॥
ततो बभ्राम तीर्थानि पर्वतांश्च वनानि च।
देशांश्च विविधान् रम्यानाश्रमान् सुमनोहरान्॥
एकस्मिन्नाश्रमपदे कृतकृत्या बभूव सा।
वरयित्वा वरं सा तु आजगाम स्वमालयं॥

[1] विचारयन् इति पुस्तकान्तरे पाठः।

सावित्री सखिसहिता परितुष्टेन चेतसा ।
तत्र पश्यति देवर्षिं नारदं पुरतः पितुः ॥
आसीनमासने विप्रं प्रणम्य स्मितभाषिणी ।
कथयामास तत्सर्व्वं येनारण्यं गतागता ॥

सावित्र्युवाच ।

आसीच्छाल्वेषु धर्म्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातो दैवादन्धो बभूव सः ॥
तस्याप्यभवद्भार्य्या वै रुक्मिणी नाम सुन्दरी ।
तस्य प्रतिहृतं राज्यं वैरिभेदेन योगतः ॥
स बालया तया सार्द्धं भार्य्यया प्रस्थितो वनं ।
स तस्य वनसंवृद्ध पुत्रः परमधार्म्मिकः ॥
सत्यवान् नामरूपाढ्यो भर्त्तेति मनसा वृतः ।

नारद उवाच ।

अहो कष्टमहो कष्टं सावित्रि किमिदं कृतं ।
कृतस्ते बालभावादयद्गुणवान् सत्यवान् नृपः ॥
सत्यं वदत्यसौ राजा सत्यावस्तेन स स्मृतः ।
नित्यमश्वाः प्रियास्तस्य करोत्यश्वान् स मृण्मयान् ।
चित्रेऽपि लिखयत्यश्वान् चित्राश्वस्तेन कथ्यते ॥
किं वर्ण्णो रन्तिदेवस्य भक्त्या दानगुणैः समः ।
ब्राह्मणः सत्यवाग्दन्तः शिबिरौशीनरो यथा ॥
ययातिरिव चोदारः सोमवत् प्रियदर्शनः ।
अश्विनाविव रूपेण द्युमत्सेनसुतो बभौ ॥

एको दोषोऽस्ति नान्योऽसावद्यप्रभृतिसत्यवान्।
संवत्सरेण चीणायुर्देहत्यागं करिष्यति॥

श्रीकृष्ण उवाच।

नारदादेतदाकर्ण्य दुहितुःप्राह पार्थिवः।
पुत्रि सावित्रि गच्छान्यं वरं वरय सत्पतिं॥
संवत्सरेण सोऽल्पायुर्देहत्यागं करिष्यति।

सावित्र्युवाच।

सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति पण्डिताः।
सकृत्कन्या प्रदीयन्ते त्रीण्येतानि सकृत्सकृत्॥
दीर्घायुरथवाल्पायुः सगुणो निर्गुणोऽपि वा।
सकृद्वृतो मया भर्त्ता न द्वितीयं वृणोम्यहं॥
मनसा निश्चयं कृत्वा ततो वाचाभिधीयते।
क्रियते कर्म्मणा पश्चादेषधर्म्मः सनातनः॥

नारद उवाच।

यद्येतदिष्टं दुहितुस्ततः शीघ्रं विधीयतां।
अविघ्नमस्तु सावित्रि भद्रन्तव करिष्यति॥
एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं ययौ।
उत्पाद्य दुःखमतुलं तस्य राज्ञो युधिष्ठिर॥
राजापि दुःखसंविग्नश्चिरंध्यानपरोऽभवत्।
अहोऽतिकष्टमुत्पन्नमपारं मादृगात्मनां॥
एतत् दुःखमहो दृष्ट्वा वरमेषानपत्यता।
सत्यमुक्तं पुराणज्ञैः कन्या दुःखैकभाजनं॥

देवैर्यदुक्तं तत्सर्व्वं व्यलीकं प्रतिभाति मे ।
एवं संशोध्य बहुधा दधावात्मानमात्मना ॥
देवीं संस्मृत्य सावित्रीं यया दत्तो वरः पुरा ।
जगौ स्वदुहितुः सर्व्वं वैवाहिकमथाकरोत् ॥
स्वयं गत्वा तु सामग्र्या वनं मुनिनिषेवितं ।
शुभे मुहूर्त्ते पार्श्वस्थै र्ब्राह्मणैर्वेदपारगैः ॥
समर्थयित्वा कन्यां तां दत्त्वा पूपांश्च पुष्कलान् ।
उवाचेदं महाभागां व्यथितेनान्तरात्मना ॥
द्युमत्सेन महाभाग शृणु मे परमं वचः ।
इयं मे दुहितातीववल्लभा जीवितादपि ॥
भर्त्ता समुचितो ह्यस्याः सत्यवान् सत्यवल्लभः ।
त्वमप्यस्याः समुचितः श्वशुरो धर्म्मवल्लभः ॥
अतोऽपराधाः क्षन्तव्याः वालेयं राज्यलालिता ।
यदाभीष्टं च जामातुर्युवयोर्यदभीप्सितं ॥
तत्तदाख्येयमस्माकं स्वस्ति तेऽस्तु व्रजाम्यहं ।

श्रीकृष्ण उवाच ।

इत्यामन्त्र्य गतो राजा नारदोक्तं व्यथान्वितः ।
सावित्र्यपि च तल्लब्ध्वा भर्त्तारं मनसेप्सितं ॥
मुमुदेऽतीव तन्वङ्गी देवं प्राप्येव पुण्यकृत् ।
एवं तत्राश्रमे तेषां तदा निवसतां सतां ॥
कालस्तपस्यतां कश्चिदतिचक्राम भारत ।
सावित्र्यास्तु शयानायाश्चिन्तयन्त्या दिवानिशं ॥
नारदेन यदुक्तन्तद्धृदयान्नापसर्पति ॥

ततः काले बहुतिथे व्यतिक्रान्ते कदाचन।
प्राप्तःकालोहि मर्त्तव्यं यत्र सत्यवता नृप॥
प्रौष्ठपदे सिते पक्षे द्वादश्यां रजनीमुखे।
गणयन्त्याश्च सावित्र्या नारदोक्तं वचो हृदि॥
चतुर्थेऽहनि मर्त्तव्यमिति सञ्चिन्त्य भामिनी।
व्रतं त्रिरात्रमुद्दिश्य सावित्राख्यं महाफलं॥
उपोष्य संस्थिता साध्वी सावित्री सा पतिव्रता।
ततस्त्रिरात्रं निर्व्वर्त्त्य स्नात्वा सन्तर्प्य देवताः॥
श्वश्रूश्वशुरयोः पादौ ववन्दे चारुहासिनी।
अथ प्रतस्थे परशुं गृहीत्वा सत्यवान्वनं।
सावित्र्यपि च भर्त्तारं गच्छन्तं पृष्ठतोऽन्वयात्॥
वार्य्यमाणापि सा भर्त्रा वृद्धाभ्याञ्चाभिभाषिता।
ऊचतुस्तौ च मा भद्रे गच्छ कण्टकिनं वनं॥
सुकुमारासि कल्याणि लालिता पृथिवीभृता।
श्वापदाश्वापदैर्य्यातु कथं गच्छसि[1] तद्वनं॥
उपवासास्त्रयस्तेऽद्य तस्माद्गृह सुमध्यमे।

सावित्र्युवाच।

नैष धर्म्मो वरस्त्रीणां यद्भर्त्तरि बुभुक्षिते॥
स्वयमेव च भोक्तव्यमित्याहुर्धर्म्मदर्शिनः॥
अपरं कौतुकं मेऽस्ति वनस्यास्य प्रदर्शने।
भर्त्रा सह प्रयास्यामि सम्भाषा स्वामिनोर्श्वरं॥

---

१ गच्छसीति पुस्तकान्तरे पाठः।

युष्मत्पादप्रसादेन मा निषेधं करिष्यथ।
ततो ज्ञात्वा च सा बाला जगामाथ पतिव्रता॥
सावित्र्यानुपदं भर्त्तुर्वने तस्मिन् मनोरमे।
गत्वासौ दूरमध्वानं जयाहाथ फलादिकं॥
समित्कुशाश्च कुसुमं भार्य्यया स वदन् प्रियं।
काष्ठानि शुष्काण्यादाय काष्ठभारमबन्धयत्॥
काष्ठं कुठारेण तथा पाटयामास लीलया।
अथ पाटयतस्तस्य जाता शिरसि वेदना॥
ततः संत्यज्य तत्सर्व्वं वटच्छायामुपाश्रितः।
सत्यवान् वेदनाक्रान्तः किञ्चिद्दर्शितमानसः॥
वटशाखामवष्टभ्य सत्यवान् प्राह गद्गदं।
सावित्रि पश्य शिरसि वेदना मां प्रबाधते॥
न च किञ्चित् प्रवक्ष्यामि भ्रमत्येव हि मे मनः।
तवोत्सङ्गे क्षणन्त्वत्र स्वप्तुमिच्छामि सुन्दरि॥
स्वपिहि त्वं महाबाहो सावित्री प्राह दुःखिता।
पश्चादपि गमिष्यावः स्वाश्रमं सुमनोहरं॥
यावदुत्सङ्गगं कृत्वा शिरयास्ते महीतले।
तावत् करालवदनाः शतशोऽथ सहस्रशः॥
आजग्मुर्यमदूताश्च रौद्राश्चातिभयङ्कराः।
न शेकुर्द्दृष्टिपातेऽस्याः सावित्र्या ह्यात्मसन्निके॥
गत्वाचचक्षु स्तत्सर्व्वं सावित्र्यास्ते तु प्रभुं तं।
दृष्टिपातेन नास्माभिः शक्यतेऽस्याः प्रबाधितुं।
दहतीव च नो देहं दृष्टिपातेन सा सती।

तत् स्वयं याहि नोऽस्माभिः साध्यते सत्यवान् क्वचित् ॥
इत्याकर्ण्य यमः कोपादुत्थायाथ वरासनात् ।
आरुह्य महिषं रौद्रं रौद्रः प्राणहरो बली ॥
आजगाम त्वरायुक्तो यत्रास्ते सा पतिव्रता ।
सावित्र्यपि च सन्त्रस्ता वीक्षमाणा इतस्ततः ॥
सावधाना कथं कोऽद्य भर्त्तारं मम नेष्यति ।
तावद्ददर्श सा बाला पुरुषं कृष्णपिङ्गलं ॥
किरीटिनं पीतवस्त्रं साक्षात् सूर्य्यमिवोदितं ।
तमुवाचाथ सावित्री प्रणम्य मधुराक्षरं ॥
कस्त्वन्देवोऽथ दैत्यो वा मान्धर्षितुमुपागतः ।
न चाहं केनचिच्छक्या स्वधर्मादवरोपितुं ॥
प्रष्टुं वा पुरुषश्रेष्ठ दीप्ताम्वह्निशिखामिव ॥

यम उवाच ।

यमः संयमनश्चाहं सर्व्वभूतभयङ्करः ।
क्षीणायुरेष ते भर्त्ता सन्निधौ ते पतिव्रते ॥
न शक्तः किङ्करैर्नेतुं ततोऽहं स्वयमागतः ।
एवमुक्त्वा सत्यवतः शरीरात् पाशसंयुतं ॥
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ।
अथ प्रयातुमारेभे पन्थानं पितृसेवितं ॥
सावित्र्यपि वरारोहा कृत्वा पादेन मङ्गलं[१] ।
रक्षार्थं भर्त्तृकायस्य ययावनुपदन्ततः ॥

---

१ मण्डलमिति पुस्तकान्तरे पाठः ।

पतिव्रतत्वादश्रान्ता ध्यायमाना निजं पतिं[१]।
तच्चित्ता तद्गतप्राणा तामुवाच यमस्तदा ॥
निवर्त्य गच्छ सावित्रि सुदूरं त्वमिहागता।
एष मार्गो विशालाक्षि न केनाप्यनुगम्यते ॥

सावित्र्युवाच।

न श्रमो न च मे ग्लानिः कदाचिदपि जायते।
भर्त्तारमनुगच्छन्त्यास्तव शिष्टस्य सन्निधौ ॥
सतां सन्तो गतिर्नान्या स्त्रीणां भर्त्ता सदा गतिः।
वेदा वर्णाश्रमाणाञ्च शिष्याणाञ्च गतिर्गुरुः ॥
सर्वेषामेव जन्तूनां स्थानमस्ति महीतले।
मुक्त्वा भर्त्तारमेकन्तु स्त्रीणां नान्यः समाश्रयः ॥
एभिरन्यैः समुचितैर्वाक्यैर्धर्म्मार्थसंयुतैः।
तोषितो धर्म्मराजस्तु सावित्रीमिदमब्रवीत् ॥
तुष्टोऽस्मि तव भद्रे ऽथ वरान् वरय सुव्रते ॥
सा च वव्रे वरान पञ्च विनयावनता सती।
चक्षुःप्राप्तिस्तथा राज्यं श्वशुरस्य महात्मनः ॥
जीवितञ्च तथा भर्त्तुर्धर्म्मप्राप्तिञ्च शाश्वतीं।
पितुः पुत्त्रशतञ्चैव तथा च शतमात्मनः ॥
धर्म्मराजो वरं दत्त्वा प्रेषयामास तान्ततः।
आजगामाथ सावित्री न्यग्रोधविटपस्तथा ॥
कृत्वोत्सङ्गे शिरस्तस्य पूर्व्ववन्निषसाद सा।
गात्रसंवाहनं चक्रे भर्त्तुःशान्तस्य भारत ॥

१ निजं पदमिति पुस्तकान्तरे पाठः।

उत्थितश्चेतनां प्राप्य नीरुक् प्राहेदमादरात्।
कथं न बोधितो भद्रे कालोऽतीव गतो मम॥
किं वक्ष्यति हि मे तातः किञ्च माता च दुःखिता।
विरुद्धं ह्यद्य संजातं कालोऽतीव गतो वने॥
विहाय मातापितरौ कालो न क्वापि मेऽत्यगात्।
इति मत्वा विरुध्येते कृतं नेह प्रबोधनं[1]॥

सावित्र्युवाच।

कथं त्वां बोधयाम्यत्र पीड़ितन्तु शिरोरुजा।
मम नाथ विलम्बोऽभूदकार्य्येण तवानघ॥
प्रहस्योत्थाय सावित्री जग्राह शिरसेन्धनं।
समित्कुशादिकं साथ जग्मतुस्तौ स्वमाश्रमं॥
ततः पित्रा स्वनेत्राभ्यां दृष्टौ तौ परया मुदा॥
आलिङ्ग्य मूर्ध्न्याघ्राय पुत्रमङ्के निवेश्य सः।
उवाच दिष्ट्या पश्यामि सभार्य्यस्त्वां समागत॥
विलम्बकारणं पृष्टः समाचष्टे यथातथा।
विदितार्थोऽतिसंहृष्टः पूजयामास तां सतीं॥
अथापरं पूर्व्वजैर्भुक्तं राज्यं निहतकण्टकं।
द्युमत्सेनो महाभाग इयाज क्रतुभिस्तदा॥
ततोनृपविरासाद्य पुत्रानात्मगुणाधिकान्।
सावित्र्या चेष्टितं ज्ञात्वा जामातुर्जीवितं तथा॥
राज्यप्राप्तिं च विपुलां परां मुदमवाप सः।

---

१ कृतामेवप्रबोधनमिति पुस्तकान्तरे पाठः।

२ आचार्य्यैरिति पुस्तकान्तरे पाठः।

सावित्र्याख्यानकमिदं सर्व्वपापप्रणाशनं ॥
अवैधव्यप्रदं स्त्रीणां स्वर्गमोक्षप्रदायकं ।
सुखसौभाग्यदं पार्थ प्रातर्जप्यमिदं सदा ॥
भाद्रपदे पौर्णमास्यामाशु चीर्णं व्रतं त्विदं ।
माहात्म्यमस्य नृपतेः कथितं सकलं मया ॥

युधिष्ठिर उवाच ।

कीदृशं तद्व्रतं कृष्ण सावित्र्या यदनुष्ठितं ।
तस्मिन् भाद्रपदे मासि विधानं तस्य शंस मे ॥
का देवता व्रते तस्मिन् को मन्त्रः किं फलं विभो ।
एतदाख्याहि मे नाथ न हि तृप्यामि माधव ॥

श्रीकृष्ण उवाच ।

श्रूयतां पाण्डवश्रेष्ठ सावित्रीव्रतमादरात् ।
कथयामि यथा चीर्णं तया सत्या युधिष्ठिर ॥
त्रयोदश्यां भाद्रपदे दन्तधावनपूर्वकं ।
त्रिरात्रं नियमं कुर्य्यादुपवासस्य भक्तितः ॥
अशक्ता च त्रयोदश्यां नक्तं कुर्य्याज्जितेन्द्रिया ।
अयाचितं चतुर्दश्यां पौर्णमास्यामुपोषणम् ॥
नित्यं स्नात्वा महानद्यां तडागे निर्झरेऽपि वा ।
विशेषतः पूर्णमास्यां स्नानं सर्षपमृज्जलैः ॥
गृहीत्वा वालुकां पात्रे प्रस्थमात्रां युधिष्ठिर ।
अथवा धान्यमादाय यवशालितिलादिकं ॥
ततो वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते ।
सावित्रीप्रतिमां कृत्वा ब्रह्मणश्चैव शोभनं ॥

सौवर्णीं मृण्मयीं वापि स्वशक्त्या रौप्यनिर्मितां।

ब्रह्मणोरूपनिर्म्माणं पूर्व्वमभिहितं वेदितव्यं।

रक्तवस्त्रयुगं दद्यात्साविच्या ब्रह्मणः सितं॥

सावित्रीं ब्रह्मणासार्द्धमेवं भक्त्या प्रपूजयेत्।

गन्धैः पुष्पैश्च नैवेद्यैर्दीपकैर्मोदकैः शुभैः॥

पूर्णं कोशातकैः पक्वैः कूष्माण्डैः कर्कटीफलैः।

नारिकेलैश्च खर्जूरैः कपित्थैर्दाड़िमैस्तथा॥

वीजपूरैः सनारङ्गाखोटैः पनसैस्तथा।

धान्यकैर्जीरकैर्हृद्यैर्गुडेन लवणेन च।

विरूढैः सप्तधान्यैश्च वंशपात्रप्रकल्पितैः॥

हरिद्रया कण्ठसूत्रैः शुभैः कुङ्कुमकेसरैः।

अवतारं करोत्येव सावित्री ब्रह्मणः प्रिया॥

तामर्च्चयीत मन्त्रेण सावित्रीं ब्राह्मणीं स्वयं।

इतरासां तथा स्त्रीणां पुराणोक्तो विधिः स्मृतः॥

ओंकारपूर्व्वके देवि वीणापुस्तकधारिणी।

वेदमातर्नमस्तुभ्यमवैधव्यं प्रयच्छ मे॥

रूपं देहि यशोदेहि सौभाग्यं देहि देवि मे।

यथा प्रसन्ना सावित्रा स्तथा मां पाहि पाविनि॥

एवं संपूज्य विधिवज्जागरं तत्र कारयेत्।

गीतवादित्रनिर्घोषैर्हृष्टनारीकदम्बकैः॥

पुण्याख्यानैश्च विविधैस्तां रात्रिमतिवाहयेत्।

उत्सवेन नयेद्रात्रिं सावित्र्याश्च कथानकैः॥

ततः प्रभातसमये रवावनुदिते सति।

सावित्रीं ब्राह्मण श्रेष्ठ नैवेद्यानि निवेदयेत् ॥
अथ सावित्रिकल्पज्ञे सावित्र्याख्यानवाचके ।
वेदज्ञे तु स्वदृस्थे दरिद्रे वा कुटुम्बिनि ॥
मन्त्रेणानेन कौन्तेय प्रणम्य विधिपूर्व्वकं ।
दूर्व्वाक्षततिलैर्म्मिश्रां पूर्व्वाशाभिमुखस्थितां ॥
शुचिवस्त्रधरो विप्रमोंकारस्वस्तिपूर्वकं ।
सावित्रीयं मया दत्ता सहिरण्या हिरण्मयी ॥
ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यतां ।
एवं दत्त्वा द्विजेन्द्राय सावित्रीं तां युधिष्ठिर ॥
नैवेद्यादि च तत्सर्व्वं ब्राह्मणस्य गृहं नयेत् ।
स्वयं दशपदं गच्छेत्स्ववेश्म तत आविशेत् ॥
गौरिण्यो भोजयेद्भक्त्या हविष्यान्नेन शक्तितः ।
पुष्पैः कुङ्कुमसिन्दूरैस्ताम्बूलैः कण्ठसूत्रकैः ॥
वासोभिर्भूषणैः[1] भक्त्या वित्तशाठ्यविवर्जिता ।
विसर्जयेत्ततस्तांश्च सावित्रीप्रीयतामिति ॥
वक्तव्यं ब्राह्मणैः सर्वैस्तुष्टैर्भक्तोत्तरे भृशं ।
सावित्री वरदा तुभ्यं भवतां भावसुव्रता[2] ॥
पुत्रा लक्ष्मी तथा भर्त्ता परमायुरनामयः ।
पुत्रैःपौत्रैश्च संवर्द्ध वर्द्धतामेव सत्कुलं ।
व्रतञ्च सुव्रतं तत्तद्विधिनानेन निश्चितं ॥
पञ्चदश्यां तथा ज्यैष्ठे वटमूले महासती ।

---

1 वासोभिर्भूषणैरिति पुस्तकान्तरे पाठः ।

2 भवन्तु तव सुव्रतेदृति पुस्तकान्तरे पाठः ।

त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत्॥
सार्द्धं सत्यवता साध्वीं फलनैवेद्यदीपकैः।
वटावलम्बिनं कृत्वा काष्ठभारं युधिष्ठिर॥
रात्रौ जागरणं कृत्वा गीतनृत्यपुरःसरं।
ततः प्रभाते विधिना पूर्व्वोक्तेन नरोत्तम॥
तामपि ब्राह्मणे दद्यात् प्रणिपत्य क्षमापयेत्।
एतद्व्रतवरं पार्थ कथितं विधिवन्मया॥
याश्चरिष्यन्ति लोकेऽस्मिन् पुत्रपौत्रसमन्विताः।
भुक्त्वा भोगांश्चिरं भूमौ यास्यन्ति ब्रह्मणः पदम्॥
एतत् पुण्यं पापहरं धन्यं दुःस्वप्ननाशनं।
जपतां शृण्वतां चैव सावित्री व्रतमादरात्॥

स्त्यर्थवेदजननीं सहभर्त्तृकां यां
सम्पूजयेत् कृतदिनत्रितयोपवासा।
सावित्रिवत् पितृकुलस्य तथैव भर्त्तु
रुद्धृत्यया भुवि भुनक्ति चिरं सुखानि॥

इति भविष्योत्तरोक्तं ब्रह्मसावित्री व्रतं।

---

स्कन्दपुराणात्।

धर्म्मराजवरप्रदानानन्तरं सावित्र्युवाच।
मदीयन्तु व्रतं देव भक्त्या नारी करिष्यति।
भर्त्तुः सन्निहिता साध्वी समस्तफलभाजना॥

धर्मराज उवाच ।

नारी वा विधवा वापि अपुत्रा पतिवर्ज्जिता[1] ।
सभर्त्तृका[2] सपुत्रा वा कार्य्यं व्रतमिदं शृणु ॥
ज्येष्ठमासे तु संप्राप्ते पौर्णमास्यां पतिव्रता ।
स्नात्वा चैव शुचिर्भूत्वा वटं सिञ्च्य वरुटकः ॥
सूत्रेण वेष्टयेद्भक्त्या गन्धपुष्पाक्षतैः शुभैः ॥
नमो वैवस्वतायेति भ्रमयन्तोप्रदक्षिणं ।
रात्रौ कुर्वीत नक्तञ्च अब्दमेकं समाहिता ।
तथैव वटवृक्षस्य पक्षे पक्षे च पूजयेत ॥
संप्राप्ते च पुनर्ज्येष्ठे लघुभुक् द्वादशीर्ब्रयेत् ।
दन्तानां धावनं कृत्वा नियमं कारयेत्ततः ॥
त्रिरात्रं लङ्घयित्वा च चतुर्थे दिवसेऽह्नं ।
चन्द्रायार्घ्यं प्रदत्त्वा च पूजयित्वा च तां सतीं ॥
मिष्टान्नानि यथाशक्त्या पूजयित्वा द्विजोत्तमान ।
सोत्तेऽहन्तु जगद्धात्रि निर्व्विघ्नं कुरु मे मुने ॥

नियममन्त्रः ।

कृत्वा वंशमये पात्रे वालुकाप्रस्थमेव च ।
सप्तधान्ययुतं पात्रं प्रस्थैकेन द्विजोत्तम ॥
वस्त्रद्वयोपरि स्थाप्य सावित्रीं ब्रह्मणा सह ।
हैमीं कृत्वा तयोः प्रोक्ष्य त्रिरात्रमुपवासयेत् ॥
न्यग्रोधस्य तले तिष्ठेद्यावच्चैव दिनत्रयं ।

---

[1] पूर्ववर्जिता इति पुस्तकान्तर पाठः ।

[2] सपुत्रका इति पाठान्तर ।

